


## श्रीनिवासमङ्गापुरस्य श्रीकल्याणवेङ्कटेश्वरस्वामिनः वार्षिकब्रह्मोत्सवः

२४-०२-२०१९ तः ०४-०३-२०१९ पर्यन्तम्

२४.०२.२०१९ भानुवासरः
प्रातः - ध्वजारोहणम्
रात्रौ - महाशेषवाहनम्

२५.०२.२०१९ सोमवासरः
प्रातः - लघुशेषवाहनम्
रात्रौ - हंसवाहनम्

२६.०२.२०१९ मङ्गलवासरः
प्रातः - सिंहवाहनम्
रात्रौ - मौक्तिकमण्डपम्

२७.०२.२०१९ बुधवासरः
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - सर्वभूपालवाहनम्

२८.०२.२०१९ गुरुवासरः
प्रातः - आन्दोलिकायां मोहिनी अवतारोत्सवः
रात्रौ - गरुडवाहनम्

०१.०३.२०१९ शुक्रवासरः
प्रातः - हनुमद्वाहनम्
सायं - वसन्तोत्सवः
रात्रौ - गजवाहनम्

०२.०३.२०१९ शनिवासरः
प्रातः - सूर्यप्रभावाहनम्
रात्रौ - चन्द्रप्रभावाहनम्

०३.०३.२०१९ भानुवासरः
प्रातः - रथोत्सवः
रात्रौ - अश्ववाहनम्

०४.०३.२०१९ सोमवासरः
प्रातः - चक्रस्नानम्
रात्रौ - ध्वजावरोहणम्




## तिरुपतिस्थ श्रीकपिलेश्वरस्वामिनः वार्षिकब्रह्मोत्सवः

२५-०२-२०१९ तः ०६-०३-२०१९ पर्यन्तम्

२५-०२-२०१९ सोमवासरः
प्रातः - ध्वजारोहणम्
रात्रौ - हंसवाहनम्

२६-०२-२०१९ मङ्गलवासरः
प्रातः - सूर्यप्रभावाहनम्
रात्रौ - चन्द्रप्रभावाहनम्

२७-०२-२०१९ बुधवासरः
प्रातः - भूतवाहनम्
रात्रौ - सिंहवाहनम्

२८-०२-२०१९ गुरुवासरः
प्रातः - मकरवाहनम्
रात्रौ - शेषवाहनम्

०१-०३-२०१९ शुक्रवासरः
प्रातः - तिरुच्चि मध्ये उत्सवः
रात्रौ - अधिकारनन्दिवाहनम्

०२-०३-२०१९ शनिवासरः
प्रातः - व्याघ्रवाहनम्
रात्रौ - गजवाहनम्

०३-०३-२०१९ भानुवासरः
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - अश्ववाहनम्

०४-०३-२०१९ सोमवासरः
प्रातः - रथोत्सवः
रात्रौ - नन्दिवाहनम् (महाशिवरात्रिः)

०५-०३-२०१९ मङ्गलवासरः
प्रातः - पुरुषामृगवाहनम्
रात्रौ - (कल्याणोत्सवः) तिरुच्चि उत्सवः

०६-०३-२०१९ बुधवासरः
प्रातः - सूर्यप्रभावाहने नटराजस्वामी त्रिशूलस्नानम्
रात्रौ - ध्वजावरोहणम् (रावणासुरवाहनम्)

# गीतामृतम्



जन्मकर्म च मे दिव्यं - एवं यो वेत्ति तत्त्वतः।
त्यक्त्वा देहं पुनर्जन्म-नैति मामेति सोऽर्जुन॥
(भगवद्गीता ४/९)

हे अर्जुन! मम जन्मकर्माणि दिव्यानि इति यः तात्विकदृष्ट्या जानाति, सः देहत्यागानन्तरं पुनः जन्मं न प्राप्नोति। मामेव प्राप्नोतीत्यर्थः।



# सङ्कीर्तनम्



नमो नमो जगदेकनाथ तव सर्वेश
विमलविशृतलसद्विख्यातकीर्ते ॥नमो॥
राम रघुवरसित राजीवलोचन
भूमिजारमण त्रिभुवनविजय
कोमलाङ्गश्याम कोविदरणरङ्ग
भीमविक्रम सत्यबिरुदप्रवीण ॥नमो॥
दलितदैतेयकोदन्डदीक्षादक्ष
जलजाप्रकुल विभीषणरक्षक
कलितदशरथतनय कौसल्यानन्द
सुलभवानरमुख्यसुग्रीववरद ॥नमो॥
चारुलक्ष्मणभरतशत्रुघ्नपूर्वज
तारकब्रह्मनित्यस्वरूप
धीरश्रीवेङ्कटाधिप भक्तवत्सल
भूरिगुण साकेतपुरनिवास ॥नमो॥

(श्री अन्नमाचार्यस्य संस्कृतसङ्कीर्तनानि)

एषापि सङ्कीर्तना चरणत्रयात्मिका। रागस्तु ललितः। यति प्रासनियमः पालितः। वेङ्कटाधिपस्य विविधनामभिः स्तवनं क्रियते।

# मन एव आनन्दनिलयः



भगवान् सर्वव्यापकः वर्तते। सः अस्मत्सुहृदः एव! श्रीस्वामिनः दर्शनार्थं लक्षाधिकाः जनाः अनुनित्यं दूरात् समागच्छन्ति। एतेषां सुलभरीत्या दर्शनं कारयितुं ति.ति.दे. बहुविशेषपद्धतीन् अनुसरन् एव दृश्यते। तेषु विशेषरीत्या लक्की डिप् (भाग्यचयनिका) माध्यमेन श्रीस्वामिसेवान् प्राप्तुं ति.ति.देवस्थानं व्यवस्थाम् अकल्पयत्।

किन्तु केचन चयनिकायाम् अवकाशाभावे निराशाः भवन्ति। भाग्यचयनिका पद्धत्यां केषामपि प्रमेयः न भवति। एषां भाग्यं वर्तते ते एव श्रीस्वामिनः सेवा प्रवेशचीटिकान् प्राप्नुवन्ति। ये न प्राप्नुवन्ति ते - 'तव सेवा भाग्यं कल्पयतु' इति श्रीनिवासं प्रार्थयेयुः। भगवदनुग्रहेण अस्माकम् आशयाः परिपूर्णाः भवन्ति।

भगवत्कृपा निमित्तं महर्षयः बहुसंवत्सरान् प्रतीक्षितवन्तः। भागवते गजेन्द्रोऽपि सहस्रसंवत्सर पर्यन्तं मकरेण सह युद्धं कृत्वा अचञ्चलभक्त्या विष्णुं प्रार्थितवान्। तदा विष्णुः करुणया गजेन्द्राय मोक्षं प्रापितवान्। अतः वयमपि स्वामिनः कृपार्थं भक्त्या निरीक्षणरताः भवेम। असहनं मानसिकारोग्याय समीचीनं नास्ति। असहनात् भक्तिः दूरं गच्छति।

तिरुमलां प्राप्य भक्ताः संयमनेन, भक्त्या, सहनेन स्वामिदर्शनं प्राप्नुयुः। भक्ताः स्वयमेव अन्येभ्यः अपि सुष्ठुतया दर्शनं कारयितुं पङ्क्तिनियमान् न अतिक्रमेयुः। प्रशान्ततया दर्शनार्थं सर्वेषां सहकारः आवश्यकः एव। एकक्षणकालमपि भगवन्तं भक्त्या पश्यामः चेत् तत् मधुरक्षणं मनसि स्थिरतया भवति एव। तं रूपं मनोनेत्रेण दर्शयन् यात्रां सम्पूर्णं करणीयम्।

पूर्वयुगेषु तपोधनाः भगवद्दर्शनार्थं नानायुगपर्यन्तं तपमाचरन्ति स्म। किन्तु कलियुगवासिनाम् अस्माकं भाग्यं तु तपाभावेऽपि काचन घण्टासु एव दर्शनं प्राप्यते। इयमेव कलियुगप्रशस्तिः।

उपर्युक्तविषयम् अवगत्य भक्ताः निराशा-निस्पृह-असहनादिषु न गत्वा भक्त्या-सहनेन च आनन्दनिलयं दर्शनार्थं सहकुर्वन्तु! तेन मानसमेव आनन्दनिलयरूपेण कुर्वन्तु च!!

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*

तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०५ सञ्चिका-१०

# जनवरि -२०१९

श्रीविलम्बिनामसंवत्सरस्य मार्गशीर्षकृष्णैकादशी तः
पौषकृष्णैकादशी पर्यन्तम् - १९४०





# सप्तगिरिः

गौरवसम्पादकः:-
श्री अनिलकुमार सिङ्घाल्, I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री आर्. वि. विजयकुमारः B.A. B.Ed.,
उपकार्यनिर्वहणाधिकारिणी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

वर्णचित्रविन्यासकः - श्री पि.शिवप्रसादः, ति.ति.दे.,
विश्रान्तचित्रकारः

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.

प्रधानसम्पादकस्य दूरवाणी संख्या - ९८६६३२९९५५

मुखचित्रम् - श्रीदेवीभूदेवी समेतः श्रीमलयप्पस्वामी, (तिरुमल)
अन्तिमरक्षापुटः - श्रीपद्मावती देवी, (तिरुचानूरु)

**सूचना**

मुद्रितलेखानां विचाराः लेखकानामेव ।
एतद्विषये अस्माकं दायित्वं नास्ति।

— *प्रधानसंपादकः*

**सङ्केतः**

प्रधानसम्पादकः,
सप्तगिरि, ति.ति.देवस्थानम्,
तिरुपति - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३४९.

सूचनानाम्, आक्षेपाणां च कृते
संपर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org

एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-




परिवर्तनमेव संसारस्य नियमः। परिवर्तनं निरन्तरमपि। परिवर्तिनि संसारे कतिपयानि अस्माकं जीवनस्योपरि महत्प्रभावं जनयन्ति। अनन्तकालप्रवाहे तरन्तः वयं महत्त्वपूर्णान् परिणामान् उपास्महे। तादृशेषु सङ्क्रमणम् अन्यतमम्।

- डा.एम्.जि.नन्दनराव्

**का**लाख्यपदार्थस्य सत्तां यदा अभिज्ञातवन्तः तदा कालगणनार्थं मानानि अपेक्षितानि अभवन्। स्थूलतया रात्रिः दिवेति कालपरिवर्तनं सर्वेषाम् अनुभवे वर्तते। तयोः कारणभूतौ सूर्यचन्द्रौ इति मत्वा कालस्य मानार्थं चन्द्रसूर्ययोः ग्रहणं कृतम्। भारतेतरदेशेष्वपि कालगणनार्थं विधानमिदं स्वीकृतम्। तयोर्मध्ये केषुचित् प्रान्तेषु सुर्यः प्रधानः, केषुचित् चन्द्रः। सूर्याधारितकालगणना सौरमानमिति, चन्द्राधारितगणना चान्द्रमानमिति च व्यवह्रियते। भारतस्य उत्तरे चान्द्रमानं प्रधानं मन्यन्ते, दक्षिणे तु सूर्यम्। अयमपि अत्र अवधेयः अंशः यत् सौरमानमनुसरन्तोऽपि केषुचिद्विषयेषु चान्द्रमानं, चान्द्रमानमनुसरन्तोऽपि केषुचिद्विषयेषु सौरमानानुसरणम् अनिवार्यं प्रतिभाति।

**भारते कालगणनायाः मानानि** - सौरमानचान्द्रमानौ कालगणनायाः प्रधानमानौ। तदतिरिच्याऽपि भारते कालगणनायां कतिपयानि मानानि व्यवहारपथे वर्तन्ते। उद्देश्यभेदात् मानभेदः। बृहस्पतेः (गुरुग्रहस्य) चलनम् अनुसृत्य क्रियमाणा कालगणना बार्हस्पत्यमानमिति उच्यते। अस्य अनुसरणं काशीप्रान्तेषु विशेषतः दृश्यते। बृहस्पतिः एकस्मिन् राशौ एववर्षकालं सञ्चारं करोति इति अत्र स्मरणीयः विषयः। नाक्षत्रमानमपि क्वचित् उपयुज्यते। नक्षत्राणां चलनमनुसृत्य कालगणना अत्र क्रियते। सावनमानं कालगणनार्थं विद्यमानं विशिष्टं मानम्। यज्ञादीनां निर्वहणसन्दर्भे अस्य मानस्य उपयोगः। कतिपययज्ञाः पञ्च-षड्-नवेत्यादि दिवसाः अनुष्ठेया इति नियमः भवति। तदा सावनमानमनुसृत्य व्यवहरन्ति। अत्र प्रतिपदादि तिथीनां गणना न क्रियते। पञ्चदिवसीयः क्रतुः पञ्चसु दिवसेषु अनुष्ठीयते। सावनमानं तत्कालाधीनमिति चिन्तनीयम्। यज्ञादीनाम् अनुष्ठानार्थमेव विद्यत इति ग्राह्यम्।

**बहुविधं सङ्क्रमणम्** - ग्रहाणां राशौ प्रवेशकालः सङ्क्रमणम् इति कथ्यते। अतः अनेकानि सङ्क्रमणानि, सम्भवन्ति। रविः यदा एकस्मात् अन्यस्मिन् राशौ प्रयिशति तदा मेषादि सङ्क्रमणानि भवन्तीति बहवः जानन्ति। तथैव सौम्यादीनां राशिप्रवेशोऽपि सङ्क्रमणमेव। पर्वरूपेण यद्यपि एतेषां परिगणना यद्यपि नास्ति तथापि जातकचक्रपरिशोलने एतेषां परिगणना भवति। प्रधानतया सूर्यस्य राशिप्रवेशकाल एव सङ्क्रमणरूपेण प्रसिद्धम्।

**सूर्यसङ्क्रमणस्य विशेषः** - सूर्यः त्रिंशद्दिनानि एकस्मिन् राशौ सञ्चरति। ततः परं तदनन्तरराशौ प्रविशति। तथा राशिप्रवेशकालं सङ्क्रमणमिति व्यवहरन्ति। मेषतः मीनराशि पर्यन्तम् प्रत्येकस्यापि सङ्क्रमणस्य काचन विशिष्टसंज्ञा दृश्यते। मेषतुलयोः सङ्क्रमणं विषुवत्सङ्क्रान्तिरिति, वृषभसिंहकुम्भराशीणां विष्णुपद -सङ्क्रान्तिरिति, मिथुन-कन्या-धनु-मीनानां षडशीत्यानन सङ्क्रान्तिरिति च व्यवहारः। कर्काटकसङ्क्रान्तिः दक्षिणायन सङ्क्रान्तिः। तथैव मकरसङ्क्रान्तिः उत्तरायणसङ्क्रान्तिः

**मकरसङ्क्रमणात् उत्तरायणस्य आरम्भः। दक्षिणायनादपि उत्तरायणं श्रेष्ठम्। महाभारतयुद्धे दक्षिणायने शरशय्यां गतः भीष्मः शरीरत्यागार्थम् उत्तरायणपुण्यकालस्य प्रतीक्षाम् अकरोत्। मकरसङ्क्रमणस्य पर्वकाले जनाः पुण्यतीर्थेषु स्नानमाचरन्ति। पितृदेवताभ्यः तर्पणं प्रयच्छन्ति।**



भवति। अस्य अयमर्थः यत् कर्काटकसङ्क्रमणात् दक्षिणायनस्य आरम्भः, मकरसङ्क्रमणात् उत्तरायणस्य आरम्भः। उत्तरायणं सौम्यायनं दक्षिणायनं याम्यायनमिति शास्त्रे व्यवहरन्ति। उत्तरायणं दक्षिणायनादपि शुभदायकम्। अतः उत्तरायणे एव विवाहोपनयनादिकं कुर्वन्ति। उत्तरायणं देवताप्रीतिकरम्। अत एव उत्तरायणारम्भकालं मकरसङ्क्रमणमिति पर्वरूपेण आभारतं समाचरन्ति। लोके सङ्क्रान्त्युत्सव इत्यपि व्यवहारः। अस्मिन् दिवसे विशेषतः कृषीवलाः स्वपशगणस्य पूजनेन कृतज्ञतां प्रकटयन्ति। गवां सहकारेणैव कृषिकार्यं साधितं भवति। केषु चित् प्रान्तेषु सामूहिकक्रीडा अपि आयोजिता भवन्ति। तेषु युवानः महता उत्सोहेन भागं गृह्णन्ति।

**मकरसङ्क्रमणम् -** मकरसङ्क्रमणात् उत्तरायणस्य आरम्भः। दक्षिणायनादपि उत्तरायणं श्रेष्ठम्। महाभारतयुद्धे दक्षिणायने शरशय्यां गतः भीष्मः शरीरत्यागार्थम् उत्तरायणपुण्यकालस्य प्रतीक्षाम् अकरोत्। मकरसङ्क्रमणस्य पर्वकाले जनाः पुण्यतीर्थेषु स्नानमाचरन्ति। पितृदेवताभ्यः तर्पणं प्रयच्छन्ति। प्रयागादि सङ्गमक्षेत्रेषु लक्षशः भक्ताः, साधवः, सन्यसिनः, हिमालयस्य तपस्विनः समागत्य पुण्यस्नानमाचरन्ति। वङ्गदेशस्य गङ्गा-सागरसङ्गमेऽपि अधिकसङ्ख्याकाः जनाः पुण्यस्नानमाचरन्ति। महाराष्ट्रेषु तिलपिष्टं शरीरे लेपयित्वा पुण्यस्नानं कृत्वा दानादिकं निर्वहन्ति। आन्ध्रतेलङ्गाण्योः दिनत्रयं वैभवेन उत्सवं समाचरन्ति। सङ्क्रान्तेः पूर्वदिवसं भोगि इति, सङ्क्रान्तेरनन्तरदिवसं कनुम इति च वदन्ति। भोगिदिवसे प्रभातकाले गृहस्य पुरतः पुरातनवस्तूनि दग्धं कृत्वा तेन वह्निना जलम् उष्णीकृत्य स्नान्ति। सङ्क्रान्तौ बहवः पितृदेवताः आराधयन्ति। कनुमदिवसे ग्रामेषु महता उत्साहेन क्रीडोत्सवादिकं समाचरन्ति। कर्नाटके सङ्क्रान्त्युत्सवे गृहं गृहं गत्वा गुडं तिलञ्च वितरन्ति। महाराष्ट्रेऽपि एतादृशः आचारः दृश्यते। तमिळनाडुप्रान्ते सङ्क्रमणस्य 'पोङ्गल्' इति व्यवहारः वर्तते। विविधक्रीडाविनोदैः सह पर्वमिदं समाचरन्ति। वृषभसम्बद्धक्रीडाः अपि प्रसिद्धाः। कृषिकाणां पर्वत्वेन प्रसिद्धा सङ्क्रान्तिः विविधनामभिः आचरणे वर्तते। कृषिप्रधाने भारते कृष्युत्पन्नानां प्राप्त्यनन्तरं सोत्साहं सङ्क्रान्त्युत्सवः आचर्यते। कृषिकार्ये संलग्नाः गोवृषभादयः अस्मिन् पर्वणि अलङ्कृत्य पूज्यन्ते। सङ्क्रमणपर्वकालः मन्त्रानुष्ठादिकं कर्तुमपि योग्यः कालः। एवं सङ्क्रान्तेः बहुविधाः आयामाः वर्तन्ते।



# श्रीशैलेशः - श्रीवेङ्कटनाथः

- (श्री अरैयर् श्रीरामशर्मा (विद्वत्कविरत्नम् ) राष्ट्रपति प्रशस्ति सम्मानितः)

'ओम् नमो वेङ्कटेशाय' अयं मन्त्रः वेङ्कटनाथस्य विष्णोः भगवतः अष्टाक्षरी मन्त्रः। वेङ्कटो नाम सप्तगिरिकूटः। तस्य ईशः नियामकः वेङ्कटेशः श्रीनिवासः इति प्रसिद्धो विष्णुः। तस्य परब्रह्मणः सर्वेश्वरस्य नारायणस्य हि श्रीः प्रथमपट्टमहिषी। तस्याः अयं गिरिकूटः श्रीशैलः श्रीपर्वतः इति संस्कृतसाहित्ये पुराणेषु च प्रसिद्धः।

जम्बूद्वीपे भारतवर्षे भरतखण्डे कुमारीद्वीपाख्ये सप्त-कुलाचलाः प्रसिद्धाः। यथाः -

**महेन्द्रो मलयः सह्यः शुक्तिमान् ऋक्षपर्वतः।**
**विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्वताः।**

इति पुराणम्।

१. विन्ध्यात् भारतमध्यस्थात् पर्वतात् उत्तरतः षारियात्रः अधुनातन राजास्थानादि देशेषु चन्द्रकान्तशिलामयोऽयं व्याप्तः आरावळी पर्वतपंङ्क्तिकूटः।

२.विन्ध्यात् दाक्षिणतः पूर्वसमुद्रतीरप्रदेशात् कन्याकुमारीशिरः पर्यन्ताञ्चलः कळिङ्गान्ध्रद्रविडदेशेषु उत्तरात् दक्षिणाऽभिमुखोऽयंव्याप्तः पूर्वघट्टनामा महेन्द्रपर्वतः।

३. मलयः कावेर्याः नद्याः दक्षिणतः द्राविडकेरळ -प्रदेशेषु गङ्ग-पाण्ड्य-चोळ-चेरदेशेषु व्याप्तः कन्याकुमारीशिरोञ्चलः।

४. सह्यः अद्यतन मुम्बापुरीमारभ्य महाराष्ट्र - कर्णाटक - क्रोडदेशेषु पाश्चिमघट्टनामा लोहमयः प्रसिद्धः।

५. शुक्तिमान् विन्ध्यस्य दक्षिणतः पूर्वभागे उत्कलोढ्रदेशयोः व्याप्तः।

६. ऋक्षपर्वतः विन्ध्यस्य दक्षिणतः पश्चिमभागे सूरतनगर तापीनदी प्रदेशादिषु व्याप्तः।

७. विन्ध्यः नर्मदया मेकलपर्वतजातया पत्न्येव आलिङ्गितः भरतखण्डे उत्तरापथ - दक्षिणापथयोः सीमापर्वतः प्रसिद्धः।

एवं महेन्द्रपर्वतश्रेण्याः पश्चिमदिशि तया अन्वितः श्रीपर्वतः 'तिरु-मलै' इति द्राविडे अनूदितः प्रसिद्धः।

''तिरुमलै-अप्पन्'' इति श्रीनिवासस्य द्राविडं नाम। आत्मन् शब्दस्य प्राकृतभाषारूपं हि 'अप्पन्' इति देश्यां भवति। आत्मा=अप्पा इति शुद्धं प्राकृतम्। मलैयप्पन् इति

प्रसिद्धो वेङ्कटनाथ एव श्रीशैलस्य आत्मा। यथा स्कान्दपुराणकाशीखण्डानुसारेण काशीक्षेत्रस्य आत्मा आदिकेशव एव।

"व्यासोच्छिष्टं जगत् सर्वम्" इति महर्षिगणेषु वेदव्यासमहर्षिणा वर्णितेषु पर्वतक्षेत्रेषु श्रीवेङ्कटाद्रिः श्रीपर्वतः द्वादशपुराणेषु वर्णितः।

एवं 'बाणोच्छिष्टं जगत् सर्वम्' इति कवीनां मध्ये बाणभट्टः स्वयं दिव्यक्षेत्राणि प्रसङ्गानुसारेण वर्णितवान्। तत्र उत्तरतः प्रथमो वर्षपर्वतः हिमालयः। तत्र 'प्रीतिकूटः' इति क्षेत्रं शेषशयनाष्टभुजनृसिंहाधिष्ठितं यद् इदानीं बौद्धैः पूर्वमेव नाशितं इति प्रतीतिः। द्राविडदिव्यसूरिषु परकालसूरिः अच्छोदसरस्तीरे इमं दिव्यदेशं 'तिरुप्पिरिदि' इति प्रप्रथमं वर्णितवान्। ततश्च आदिशङ्कराचार्येण तत् क्षेत्रं बौद्धनाशितं विज्ञाय काचन नृसिंहमूर्तिः तत आदाय बदरीक्षेत्रमार्गे ज्योतिर्मठे स्थापिता इति प्रसिद्धिः। प्रीतिकूटः बाणभट्टस्य पूर्वजानां अभिजनः। ततश्च तेषां ततो धावित्वा विन्ध्यपरिसरे आस्थाय प्रीतिकूटाग्रहारः स्थापितः इति ज्ञायते। भट्टबाणेन अच्छोदसरः प्रीतिकूटश्च स्वकाव्ये वर्णितौ। इतः दक्षिणापथे श्रीपर्वतः सिद्धिक्षेत्रम् इति प्रसिद्धं, महात्मना भारतराष्ट्ररक्षकेण चाणक्येन सुवर्णसिद्धयर्थं आश्रितपूर्वः बाणभट्टेन हर्षचरिते वर्णितः। केरळीयपाठे उपलभ्यते। यथाः -

**जयति ज्वलत् प्रताप-ज्वलनप्राकार-कृतजगद्रक्षः।**
**सकलप्रणयिमनोरथ - सिद्धिः श्रीपर्वतो हर्षः।।** इति।

एवमिह महाराजहर्षवर्धनस्य श्रीपर्वत एव एकम् उपमानम्।

वयम् इदानीम् अपि श्रीपर्वतं तिरुमलैप्रदेशं पश्यामः। उदयगतसूर्यारुणवर्णशैलकूटपङ्क्तिः अग्नि प्राकारवत् दृश्यते। मन्त्रादि सिद्धिसाधकाः आत्मरक्षार्थं अग्निप्राकारमन्त्रान् पठन्ति। सर्वे च भगवति प्रणयिनो भक्ताः स्वं स्वं मनोरथं तिरुमलैप्रदेशे यात्रया तत्रत्य वेङ्कटनाथप्रार्थनया लभन्ते एव।

'तिरुवेङ्गडम्' इति इमं पर्वतं शठकोपसूरिरपि द्राविडवेदे वर्णयन् 'शम्-ती-मलेरुं तिरुवेङ्गडत्तु" इति वदति। शोणवर्णः अग्निः अत्र प्रफुल्लः परितः श्रीशैले इत्यर्थः। अग्निः अत्र न दाहकः किन्तु कमलपुष्पवत् प्रफुल्ल इति भावः।

एवं वास्तवस्य श्रीशैलस्य वर्णने उभयोः महादिव्यकव्योः साम्यं ज्ञायत एव। प्रफुलकमलवत् अग्निवर्णस्य श्रीपर्वतस्य भोग्यत्वं शठकोपस्य वचसि, जगद्रक्षकाग्नि-प्राकरतया वर्णनं बाणभट्टवचसीत्येव विशेषः।

अस्य श्रीपर्वतस्य आत्मा वेङ्कटनाथ एव। अस्य परिकरास्तु अहोबलनृसिंह-श्रीशैलमल्लिकार्जुनादयः। कलियुगे 'विश्वदैवम्' वेङ्कटनायकः एव इति पुराणे स्पष्टीकृतम्। यथा व्यासवाक्यम् -

**कृते वरदराजस्तु, त्रेतायां रङ्गनायकः।**
**द्वापरे तु जगन्नाथः, कलौ वेङ्कटनायकः।।** इति



## 'सप्तगिरि' ग्राहकेभ्यः सूचनाः

**सप्तगिरि-मासपत्रिकायाः पाठकेभ्यः प्रतिमासं सकाले प्रापणार्थं नानाविधकार्यान् करोतीति अवगतः विषयः एव। अस्मिन्नेव क्रमे भक्तानां सङ्केतानां क्रमीकरणार्थं प्रयत्नं करोति। पाठकाः एनं विषयं दृष्टौ स्थाप्य अधोनिर्दिष्ट प्रकारेण प्रधानसम्पादकस्य कार्यालयं प्रति सम्पर्कं कुर्वन्तु।**

**१.सप्तगिरि मासपत्रिकायाः सम्बन्धिताः सूचनाः, आक्षेपान् च** sapthagiri.helpdesk@tirumala.org **द्वारा सूचयितुं शक्नुवन्ति।**

**२. सप्तगिरि ग्राहकाः सङ्केतस्य परिवर्तन-सम्बन्धी विवराणां कृते ०८७७-२२६४५४३ दूरवाणीं प्रति स्वीय सम्पूर्णं सङ्केतं, दूरभाषा संख्यया साकं कार्यालयस्य कार्यसमये (प्रातः १०.३० तः सायं ५.०० मध्ये) पुनः ज्ञापयन्तु।**

**३. उपर्युक्त दूरवाणी संख्या द्वारा अथवा** sapthagiri.helpdesk@tirumala.org **द्वारा वा सूचयन्तु।**

**४. अन्तर्जाल (आन्लैन्) ग्राहकाः स्वीय सम्पूर्णं सङ्केतं ति.ति.दे. अन्तर्जालपुटे ज्ञापयन्तु!**




- श्री चैतन्यः

**धर्माचरणस्य विषये सर्वे वदन्ति। किन्तु को नाम धर्मः? तस्य लक्षणं किमिति प्रायः सर्वे न जानन्ति। केचन 'अहिंसा परमोधर्मः' इति, केचन यागादिरेव धर्मः' इति एवं नानारीत्या धर्मस्य विषये प्रबोधयन्ति।**

तत्र जगन्मूलत्वेन संसृति नियामकानि तत्वानि 'धर्मः' इति व्यपदिश्यन्ते। के च ते गुणाः ये इदं जगद् धारयन्ति? एतेषां वर्णनं महर्षिणा पतञ्जलिना योगदर्शने यमशब्देन व्याख्याताः।

''अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः यमाः''

(योगदर्शन-२.३०)

मनुना स्फुटमेतत् प्रतिपाद्यते यत् यमाः अनिवार्यतया सेव्याः इति। एतेषामनाश्रयत्वे सति पतनम्, अवनतिश्च। मनुना धृति-क्षमादयः दशगुणा एव धर्मशब्दवाच्यत्वेन निर्दिष्टाः।

''धृति क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्।।

(मनु.६.९२)

महाभारतकृता व्यासेन जगद्धारकतत्वानां 'धर्मः' इति समाख्या व्यधायि।

''धारणाद् धर्म इत्याहुर्धर्मो धारयते प्रजाः।
यः स्याद् धारणसंयुक्तः सधर्म इति निश्चयः।।''

धर्म एव जीवनस्य सारः। धर्ममनुसरन्तः एव जनाः अभ्युदयं प्राप्नुवन्ति; पशवस्तिर्यञ्चश्चापि आहारनिद्रादि कर्म सम्पादनेन स्वजीवनस्य साफल्यम् अश्नुवते। परं मानवजीवनम् आहारविहारादि सिद्धयर्थमेव न, अपि तु विशिष्टोद्देश्यमूलकम्। किं तद् उद्देश्यमिति, कथं च तदवाप्तुं शक्यते, इत्येतत् सर्वमपि धर्मविषयान्तर्गतमेव भर्तृहरिणा प्रोक्तं यत् -

''धर्मो हि तेषामधिको विशेषो
धर्मेण हीनाः पशुभिः समानाः''

(हितो.१.२५)

वैशेषिककृता कणादेन प्रतिपाद्यते यत् येन लौकिकी, पारलौकिकी च समुन्नतिर्भवति, स एव धर्म-शब्देन वाच्यः। ''यतोऽभ्युदयनिःश्रेयससिद्धिः सधर्मः'' (वैशेषिक.)

अत एव ज्येष्ठाः वारं वारं 'यतो धर्मस्ततो जयः' इति प्रबोधयन् अस्मान् सन्मार्गे चालयन्ति, प्रेरयन्ति च। मनुना अन्यत्र प्रोक्तं यत् - आचारः परमो धर्मः इति। सदाचारेणैव जीवने सर्वार्थसिद्धिरित्यत्र न काचन विप्रतिपत्तिर्विपश्चिताम्। अधर्माश्रयिणां श्रीः क्षणिकानन्दायैव, तेषां श्रीः शीघ्रं विनश्य दुःखदात्री भवति। धर्मरतानां, धर्मनिष्ठानां तु समृद्धेः उत्कर्षः, सुख - शान्तिसन्धायकश्च भवति। परार्थसाधनं, परहितचिन्तनञ्च जीवने सुखमनुप्रापयतः। रक्षितः धर्मः अपि धर्मबुद्धेरनर्थवारण पुरस्सरं रक्षामातनुते। बद्धमूलो धर्मो धर्मिष्ठं पावयति, त्रायते च।

एवमवलोक्यते यत् जीवने धर्मस्य सर्वदा, सर्वथा च अनिवार्यत्वं वर्तते। तस्याश्रयणेनैव ऐहिकम् - अमुष्मिकञ्च सुखमवाप्यते। अतः एवं रूपीं धर्ममाश्रित्य जीवने आनन्दं प्राप्नुमः इति शम्।



जनवरि २०१९

श्रीवेङ्कटेश! चरणौ शरणं प्रपद्ये!!

| भानु | सोम | मङ्गल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|
| | | 1 | 2 | 3 | 4 | 5 |
| 6 | 7 | 8 | 9 | 10 | 11 | 12 |
| 13 | 14 | 15 | 16 | 17 | 18 | 19 |
| 20 | 21 | 22 | 23 | 24 | 25 | 26 |
| 27 | 28 | 29 | 30 | 31 | | |

फेब्रवरि २०१९

श्रीवेङ्कटेश! चरणौ शरणं प्रपद्ये!!

| भानु | सोम | मङ्गल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|
| | | | | | 1 | 2 |
| 3 | 4 | 5 | 6 | 7 | 8 | 9 |
| 10 | 11 | 12 | 13 | 14 | 15 | 16 |
| 17 | 18 | 19 | 20 | 21 | 22 | 23 |
| 24 | 25 | 26 | 27 | 28 | | |

मार्च् २०१९

श्रीवेङ्कटेश! चरणौ शरणं प्रपद्ये!!

| भानु | सोम | मङ्गल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|
| 31 | | | | | 1 | 2 |
| 3 | 4 | 5 | 6 | 7 | 8 | 9 |
| 10 | 11 | 12 | 13 | 14 | 15 | 16 |
| 17 | 18 | 19 | 20 | 21 | 22 | 23 |
| 24 | 25 | 26 | 27 | 28 | 29 | 30 |



## जनवरि २०१९

०१. आङ्गलसंवत्सरारम्भः
१४. भोगी
१५. मकरसङ्क्रान्तिः
१६. कनुम,
श्रीगोदादेवीपरिणयोत्सवः
२१. श्रीरामकृष्णतीर्थोत्सवः
२६. गणतन्त्रदिनोत्सवः

## फेब्रवरि २०१९

१२. रथसप्तमी
१३-१९. तिरुपति
श्रीगोविन्दराजस्वामिनः प्लवोत्सवः
१६. भीष्मैकादशी
१९. कुमारधारा तीर्थोत्सवः,
२४ तः मार्च् ०४ पर्यन्तं श्रीनिवासमङ्गापुरम्
श्रीकल्याणवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः
२५ तः मार्च् ०६ पर्यन्तं तिरुपति
कपिलेश्वरस्वामिब्रह्मोत्सवः

## मार्च् २०१९

०४. महाशिवरात्रिः
१३-२१. तरिगोण्ड
श्रीलक्ष्मीनरसिंहस्वामिनः ब्रह्मोत्सवः
१६-२०. पर्यन्तं तिरुमल
श्रीस्वामिनः प्लवोत्सवः
२०. तुम्बुरु तीर्थोत्सवः
२४-२८. नागलापुरं
श्रीवेदनारायणस्वामिनः प्लवोत्सवः





## एप्रेल् २०१९

श्रीवेङ्कटेश! चरणौ शरणं प्रपद्ये।

| भानु | सोम | मङ्गल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|
| | 1 | 2 | 3 | 4 | 5 | 6 |
| 7 | 8 | 9 | 10 | 11 | 12 | 13 |
| 14 | 15 | 16 | 17 | 18 | 19 | 20 |
| 21 | 22 | 23 | 24 | 25 | 26 | 27 |
| 28 | 29 | 30 | | | | |

## मे २०१९

श्रीवेङ्कटेश! चरणौ शरणं प्रपद्ये।

| भानु | सोम | मङ्गल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|
| | | | 1 | 2 | 3 | 4 |
| 5 | 6 | 7 | 8 | 9 | 10 | 11 |
| 12 | 13 | 14 | 15 | 16 | 17 | 18 |
| 19 | 20 | 21 | 22 | 23 | 24 | 25 |
| 26 | 27 | 28 | 29 | 30 | 31 | |

## जून् २०१९

श्रीवेङ्कटेश! चरणौ शरणं प्रपद्ये।

| भानु | सोम | मङ्गल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|
| 30 | | | | | | 1 |
| 2 | 3 | 4 | 5 | 6 | 7 | 8 |
| 9 | 10 | 11 | 12 | 13 | 14 | 15 |
| 16 | 17 | 18 | 19 | 20 | 21 | 22 |
| 23 | 24 | 25 | 26 | 27 | 28 | 29 |

## एप्रेल् २०१९

०१. मत्स्यजयन्ती
०५. बाबू जगजीवनरामजयन्ती
०६-१० तिरुपतिः
श्रीकोदण्डरामस्वामिनः ब्रह्मोत्सवः
०६. विकारिनामसंवत्सरारम्भः (युगादिः)
११. महात्मा ज्योतिराव् फुले जयन्ती
१३-२१. ओण्टिमिट्ट श्रीकोदण्डरामस्वामिनः
ब्रह्मोत्सवः
१४. श्रीरामनवमी, तमिळवत्सरसंवत्सरारम्भः,
डा.बि.आर्.अम्बेडकरजयन्ती
१७-१९ तिरुमलशैले वसन्तोत्सवः
१९-२७ नागलापुरं वेदनारायणस्वामिनः
ब्रह्मोत्सवः

## मे २०१९

०७. अक्षयतृतीया, परशुरामजयन्ती
०९. श्रीशङ्करजयन्ती, श्रीरामानुजजयन्ती
११-१९. तिरुपति गोविन्दराजस्वामिनः ब्रह्मोत्सवः
१३-१५. तिरुमल श्रीपद्मावतीश्रीनिवासपरिणयोत्सवः
१५. वासवीजयन्ती, विवाहाः
१६-२४. हृषीकेश आन्ध्राश्रमस्थस्य
श्रीवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः
१७. श्रीनृसिंहजयन्ती,
श्रीतरिगोण्डवेङ्गमाम्बाजयन्ती
१८. श्रीकूर्मजयन्ती, श्रीअन्नमाचार्यजयन्ती
१७-१९. तिरुचानूरु श्रीपद्मावतीदेव्याः वसन्तोत्सवः
२९. हनुमज्जयन्ती
मे २६ तः जून् ०३ पर्यन्तं कार्वेटिनगरम्
श्रीवेणुगोपालस्वामिनः ब्रह्मोत्सवः

## जून् २०१९

१२-२१. अप्पलायगुण्ट श्रीप्रसन्नवेङ्कटेश्वरस्वामिनः
ब्रह्मोत्सवः
१४-१६. तिरुमल श्रीवारि ज्येष्ठाभिषेकः
१३-१७. तिरुचानूरु श्रीपद्मावतीदेव्याः
प्लवोत्सवः
२३-२५. तिरुचानूरु
श्रीसुन्दरराजस्वामिनः अवतारोत्सवः

## जूलै २०१९

श्रीवेङ्कटेश! चरणौ शरणं प्रपद्ये!!

| भानु | सोम | मङ्गल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|
| | 1 | 2 | 3 | 4 | 5 | 6 |
| 7 | 8 | 9 | 10 | 11 | 12 | 13 |
| 14 | 15 | 16 | 17 | 18 | 19 | 20 |
| 21 | 22 | 23 | 24 | 25 | 26 | 27 |
| 28 | 29 | 30 | 31 | | | |

## आगस्ट् २०१९

श्रीवेङ्कटेश! चरणौ शरणं प्रपद्ये!!

| भानु | सोम | मङ्गल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|
| | | | | 1 | 2 | 3 |
| 4 | 5 | 6 | 7 | 8 | 9 | 10 |
| 11 | 12 | 13 | 14 | 15 | 16 | 17 |
| 18 | 19 | 20 | 21 | 22 | 23 | 24 |
| 25 | 26 | 27 | 28 | 29 | 30 | 31 |

## सेप्टम्बर् २०१९

श्रीवेङ्कटेश! चरणौ शरणं प्रपद्ये!!

| भानु | सोम | मङ्गल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|
| 1 | 2 | 3 | 4 | 5 | 6 | 7 |
| 8 | 9 | 10 | 11 | 12 | 13 | 14 |
| 15 | 16 | 17 | 18 | 19 | 20 | 21 |
| 22 | 23 | 24 | 25 | 26 | 27 | 28 |
| 29 | 30 | | | | | |



## जूलै २०१९

१२-१४. तिरुपति श्रीगोविन्दराजस्वामिनः ज्येष्ठाभिषेकः
१६. गुरुपूर्णिमा, व्यासपूजा, चन्द्रग्रहणम्
१७. तिरुमल श्रीवारि आणिवार् आस्थानम्
२७-३०. तिरुपति श्रीकोदण्डरामस्वामिनः पवित्रोत्सवः
२७. आडिकृत्तिका

## आगस्ट् २०१९

०१. श्रीचक्रत्ताळ्वार्, श्रीप्रतिवादिभयङ्कर अण्ण त.ति.न.
०५. गरुडपञ्चमी
०९. श्रीवरलक्ष्मीव्रतम्, श्रीतरिगोण्डवेङ्गमाम्ब वर्धन्ति
११-१३. तिरुमल श्रीस्वामिनः पवित्रोत्सवः
१५. स्वातन्त्र्यदिवसः, श्रीहयग्रीवजयन्ती, श्रीविखनसाचार्यजयन्ती,
२३. गोकुलाष्टमी, श्रीकृष्णाष्टमी

## सेप्टम्बर् २०१९

०१. श्रीवराहजयन्ती, श्रीबलरामजयन्ती
०२. विनायकचतुर्थी
०३. ऋषिपञ्चमी
१०. श्रीवामनजयन्ती
१२. अनन्तपद्मनाभव्रतम्
१०-१४. तिरुचानूरु श्रीपद्मावतीदेव्याः पवित्रोत्सवः
१४ महालयपक्षारम्भः

३०तः अक्टोबर् ०८ पर्यन्तम् तिरुमल श्रीवेङ्कटेश्वरस्वामिनः वार्षिकब्रह्मोत्सवः

अक्टोबर् २०१९ — श्रीवेङ्कटेश! चरणौ शरणं प्रपद्ये!!

| भानु | सोम | मङ्गल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|
| | | 1 | 2 | 3 | 4 | 5 |
| 6 | 7 | 8 | 9 | 10 | 11 | 12 |
| 13 | 14 | 15 | 16 | 17 | 18 | 19 |
| 20 | 21 | 22 | 23 | 24 | 25 | 26 |
| 27 | 28 | 29 | 30 | 31 | | |

नवम्बर् २०१९ — श्रीवेङ्कटेश! चरणौ शरणं प्रपद्ये!!

| भानु | सोम | मङ्गल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|
| | | | | | 1 | 2 |
| 3 | 4 | 5 | 6 | 7 | 8 | 9 |
| 10 | 11 | 12 | 13 | 14 | 15 | 16 |
| 17 | 18 | 19 | 20 | 21 | 22 | 23 |
| 24 | 25 | 26 | 27 | 28 | 29 | 30 |

डिसेम्बर् २०१९ — श्रीवेङ्कटेश! चरणौ शरणं प्रपद्ये!!

| भानु | सोम | मङ्गल | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|
| 1 | 2 | 3 | 4 | 5 | 6 | 7 |
| 8 | 9 | 10 | 11 | 12 | 13 | 14 |
| 15 | 16 | 17 | 18 | 19 | 20 | 21 |
| 22 | 23 | 24 | 25 | 26 | 27 | 28 |
| 29 | 30 | 31 | | | | |



## अक्टोबर् २०१९

०२. गान्धीजयन्ती
०४. तिरुमल श्रीस्वामिनः गरुडसेवा, सरस्वतीपूजा
०५. तिरुमल श्रीस्वामिनः स्वर्णरथोत्सवः
०६. दुर्गाष्टमी, ०८. विजयदशमी
२६. नरकचतुर्दशी
२७. दीपावली, श्रीकेदारगौरीव्रतम्, तिरुमलस्वामिनः आलये दीपावली आस्थानम्
३१. नागचतुर्थी

## नवम्बर् २०१९

०४. तिरुमल श्रीस्वामिनः पुष्पयागः
०८-१२. नारायणवनम् श्रीकल्याणवेङ्कटेश्वरस्वामिनः प्लवोत्सवः
०९. कैशिकद्वादशी
१६. तिरुपति कपिलेश्वरस्वामिनः लक्षबिल्वार्चना
२३ तः डिसेम्बर् ०१ पर्यन्तं तिरुचानूरु श्रीपद्मावतीदेव्याः ब्रह्मोत्सवः
२४. धन्वन्तरी जयन्ती

## डिसेम्बर् २०१९

०१. तिरुचानूरु श्रीपद्मावतीदेव्याः पञ्चमीतीर्थम्
०२. तिरुचानूरु श्रीपद्मावतीदेव्याः पुष्पयागः
०८. गीताजयन्ती
०९. श्रीचक्रतीर्थोत्सवः
१०. तिरुपति कपिलेश्वरस्वामिनः कार्तिकदीपोत्सवः
११. दत्तजयन्ती
१७. धनुर्मासप्रारम्भः
२६. सूर्यग्रहणम्



श्रीनिवासः नित्यकल्याणचक्रवर्तिः, नित्योत्सवमूर्तिश्च। वेङ्कटेश्वरस्वामिने प्रतिदिनं कल्याणोत्सवः क्रियते। अत्यन्तः प्रशस्तोऽयं नित्यकल्याणोत्सवः। प्रतिदिनं सम्पङ्गिप्राकारे नित्यकल्याणोत्सवमण्डपे भूयमानमुत्सवं द्रष्टुं शतशः गृहस्थाः भागं गृह्णन्ति। प्रत्येकोत्सवदिनान् त्यक्त्वा कल्याणोत्सवोऽयं प्रतिदिनमाचर्यते। अत एव श्रीनिवासः नित्यकल्याणचक्रवर्तिः इति कथ्यते।

# तिरुमल श्रीस्वामिनः नित्यकल्याणोत्सवः

तेलुगु मूलम् - डा. नोर्स्सम् नरसिंहाचार्यः
संस्कृतानुवादः - श्री डि.हरिकृष्णः

## श्रीवेङ्कटेश्वरस्वामिनः कल्याणोत्सवः -

भगवत्कल्याणोत्सवरूपेण भूयमानमिदं कर्म प्रधानतया अस्माकं योग-क्षेमानां कृते एव क्रियते। योगः इत्युक्ते नूतनतया प्रापणमित्यर्थः, अर्थात् सन्तानेच्छुकानां सन्तानप्राप्तौ सन्तानयोगः इति, वाहनरहितानां वाहनक्रयणे वाहनयोगः इति वक्तुं शक्नुमः। क्षेमः इत्युक्ते स्थितस्य तथैव भवनमित्यर्थः। साधारणतया लोके यस्याभावः वर्तते तस्यकृते एव इच्छन्ति। यानि च विद्यन्ते तेषां तथैव विद्यमानार्थम् अभिलषन्ति च। एतौ योगक्षेमौ द्वावपि भगवत्कल्याणेनैव सिद्ध्येते।

## कल्याणमित्युक्ते?

'कल्याणम्' इति पदस्य अर्थं परिशीलयामश्चेत् **कल्यं सुखम् अणयति प्रापयति - इति कल्याण्** । अर्थात् सुखप्रापकः कल्याणमिति सामान्यार्थः। एनमेव विवाहः, उद्वाहः, परिणयः, पाणिग्रहणमित्यादि नानाविधनामभिः व्यवह्रियन्ते। जानपदाः तेलुगुमध्ये 'पेळ्ळि' इति, कन्नडे 'लग्न', 'मदुवे' इति तमिले 'तिरुमणम्' इति वदन्ति।

नैजे तावत् पद्मावती-श्रीनिवासयोः कल्याणः '५' सहस्रवर्षेभ्यः प्रागेव जातः। अस्मदाचर्यमाणः कल्याणोत्सवः श्रीनिवासस्यकृते नावश्यकः; परन्तु वयं अस्माकं योग- क्षेमौ इच्छन् सप्तगिरीशस्य कल्याणोत्सवम् आचरेम। तिरुमलायां श्रीवेङ्कटेश्वरस्वामिनः उत्सवमूर्तयः - श्रीदेवी-भूदेवी समेतस्य श्रीमलयप्पस्वामिनः प्रतिदिनम् अभिजिल्लग्ने भूयमाने अस्मिन् कल्याणोत्सवकार्यक्रमे शताधिकाः गृहस्थाः उपस्थितिं प्राप्य तरन्ति।

## श्रीनिवासकल्याणः पौराणिकनेपथ्यम् -

पुरा एकवारं महर्षिभ्यः मोक्षप्रसादकः देवः कः? इति सन्देहः आगतः। ऋषीणामिच्छया भृगुमहर्षिः त्रिलोकान् सञ्चरित्वा ब्रह्मा-विष्णु-महेश्वरान् परीक्षितवान्। अन्तिमे श्रीविष्णुः एव मोक्षप्रदाता इति निर्णेतवान् च। अस्मिन्नेव परीक्षाक्रमे श्रीमहाविष्णोः वक्षस्थलप्रहारकस्य भृगोः उपरि क्रुद्धा लक्ष्मीः वैकुण्ठं त्यक्त्वा भूलोकं गतवती। तामेव अन्विष्यमानः नारायणः श्रीनिवासतया नाटकरूपेण वकुलामातुः आश्रयं स्वीकृतवान्। द्वापरयुगे श्रीकृष्णस्य कल्याणदर्शनभाग्यम् अप्राप्ता यशोदा एव कलियुगे वकुलामातृरूपेण जनिता।

नारायणवने आकाशराजा सन्तानकामुकः सन्तानार्थं यागं निश्चित्य भूमेः शुद्धीकरणसन्दर्भे हलेन कर्षणसमये भूमौ स्वर्णपेटिका लब्धा। तस्यां पेटिकायां विकसितपद्मोपरि शिशुरूपेण महालक्ष्मीः आविर्भूता। सा एव पद्मावती।

पद्मावती वर्धमाना युक्तवयं प्राप्य स्वसखीभ्यः साकं क्रीडावने क्रीडनसमये अनूह्यतया एकः मत्तगजः तान् भीतिं प्रापयति। तस्मिन्नेव समये वकुलामातुः आश्रमे स्थितः



पद्मावती वर्धमाना युक्तवयं प्राप्य स्वसखीभ्यः साकं क्रीडावने क्रीडनसमये अनूह्यतया एकः मत्तगजः तान् भीतिं प्रापयति। तस्मिन्नेव समये वकुलामातुः आश्रमे स्थितः वैकुण्ठविरक्तः श्रीमन्नारायणः 'श्रीनिवास' नामधेयेन पद्मावतीं प्राप्य मत्तगजम् अपसारयति।

वैकुण्ठविरक्तः श्रीमन्नारायणः **'श्रीनिवास'** नामधेयेन पद्मावतीं प्राप्य मत्तगजम् अपसारयति। तस्मिन् सन्दर्भे पद्मावती श्रीनिवासौ द्वावपि परस्परं सौन्दर्यं वीक्ष्यमाणौ आस्ताम्। पद्मावतीं श्रीनिवासः विवरान् पृष्टे सति सख्यः श्रीनिवासस्य, तस्य अश्वोपरि च शिलाखण्डान् क्षिपन्ति। पद्मावतीं च अन्तःपुरं प्रति नयन्ति।

ततः आरभ्य द्वावपि विरहवेदनां प्राप्नुतः।। पद्मावत्याः माता धरणीदेवी तं विषयम् अवगत्य पद्मावतीम् आक्रोशति।

अत्र श्रीनिवासः वकुलादेव्यै विषयं ज्ञापयित्वा आकाशराजा धरणीदेव्योः पुत्रिकया पद्मावत्या सह स्वीय विवाहविषयम् उक्त्वा, वार्तालापं कृत्वा आगच्छतु इति तां प्रेषयति।

एनं कार्यं वकुलामाता करोति वा, उत न? इति संशयेन, स एव भविष्यवक्ता रूपेण वेषं धृत्वा गतवान्। धरणीदेव्याः अन्तःपुरसमीपे भविष्यं वदन्तीव सः तिष्ठवान्। तां प्रति धरणीदेव्याः सख्यः आगत्य पद्मावत्याः अनारोग्यस्थितिं वर्णयित्वा स्थितेः कारणविषये ज्ञातुं धरणीदेव्याः पार्श्वे नीतवत्यः।

धरणीदेवी पद्मावतीं दर्शयित्वा - अस्याः अनारोग्यकारणविषये पृष्टे सति - 'एषा श्रीनिवासस्य उपरि मग्ना अस्ति; तेन सह विवाहं कारयन्ति चेत् सम्यक्, नो चेत् भवत्याः पुत्र्याः जीवितविषये सन्देहः वर्तते। अस्य विवाहविषये वार्तालापं कर्तुं समीपे काले तस्य माता आगच्छति' इत्युक्त्वा वेङ्कटेशरूपे स्थिता भविष्यवक्ता ततः उपक्रामति।

ततः वकुलामाता तत्र समागत्य पद्मावती-श्रीनिवासयोः विवाहविषयं प्रस्ताविते सति धरणीदेवी-आकाशराजानौ सम्मतिं दत्तवन्तौ। वकुलामाता च आश्रमं प्रत्यागत्य श्रीनिवासाय शुभवार्तां श्रावितवती। श्रीनिवासेन पृष्टे सति अलकापुराधीशः कुबेरः विवाहाय धनसाहाय्यं कृतवान्। कलियुगकारणात् तस्य धनस्य कृते श्रीनिवासः पत्रलेखनं कुर्वन् - वेङ्कटाचले स्थितं तं प्रति भक्तैः समर्प्यमाणं धनं युगान्तं यावत् कररूपेण ददामीति ज्ञापितवान्। देवगुरुः बृहस्पत्याचार्यः -

**'श्रुत्वा ब्रवीत्स धिषणस्तयोरुत्तरफल्गुणी,**
**सम्मतास्सुखवृद्ध्यर्थं प्रोच्यते दैवचिन्तकैः।**
**तयोरुत्तरफल्गुण्यां विवाहः क्रियतामिति,**
**वैशाखमासे विधिवत् क्रियतामिति सोऽब्रवीत्।।**

इति वदन् वैशाखमासस्य उत्तराफल्गुणी नक्षत्रयुतं शुभमुहूर्तं पद्मावती-श्रीनिवासयोः अभिवृद्धिकारकः परिणयमुहूर्तरूपेण निश्चितवान्।

बृहस्पत्याचार्यवर्येण निर्णितं शुभमुहूर्तविषयं सर्वेभ्यः देवेभ्यः ज्ञापयितुम् आह्वानार्थञ्च श्रीनिवासः **गरुत्मन्तं** नियुक्तवान्।

ब्रह्मरुद्रादि समस्तदेवाः परिवारसमेतया श्रीनिवासः आकाशराज्ञा प्रकल्पितं विवाहस्थानं नारायणवनं प्राविशन्। तत्समये समस्तमन्त्रि-





पुरोहित-दण्डनायकैः साकं सपरिवारम् आकाशराजा तेषां स्वागतं कृतवान्।

विवाहपीठयोरुपरि पद्मावती-श्रीनिवासौ आसीनौ आस्ताम्। देवगुरुः बृहस्पतिः सकलमुनिसमेततया वेदमन्त्रान् पठितवान्। साक्षात् श्रीमन्नारायणस्वरूपाय श्रीनिवासाय श्रीमहालक्ष्म्याः स्वरूपां श्रीपद्मावतीं आकाशराजा धरणीदेव्यौ कन्यादानं कृतवन्तौ। समस्तदेवगणानां साक्षितया श्रीनिवासः पद्मावतीं माङ्गल्यधारणं कृतवान्।

इदम् अष्टादशपुराणान्तर्गतं पद्मावती-श्रीनिवासकल्याणं वर्तते।

**श्रीनिवासकल्याणं चारित्रकनेपथ्यम् -**

श्रीवेङ्कटेशस्वामिनः परमभक्ता तरिगोण्डवेङ्गमाम्बा पद्मावती-श्रीनिवासयोः विवाहमुहूर्तं 'सुरुचिर वैशाखशुक्लदशमी शुक्रवासरशुभमुहूर्तम्बु'' इति स्वीये वेङ्कटाचलमाहात्म्ये प्रोक्तवती।

प्रायः पञ्चसहस्रसंवत्सरेभ्यः प्राक् कलियुगारम्भे भूतः पद्मावती-श्रीनिवासयोः कल्याणोत्सवकार्यक्रमः क्री.श.१५ तम शताब्दपर्यन्तं तिरुमलायां विशेषदिनेषु, ब्रह्मोत्सवेषु एव कुर्वन्तः आसन्।

नन्दकांशसम्भूतः, पदकवितापितामहः श्रीनिवासस्य परमभक्तः ताल्लपाक अन्नमाचार्यः तिरुमलां प्राप्य श्रीस्वामिनः कल्याणोत्सवं प्रारभ्य स्वयं कन्यादातृ रूपेण व्यवहृतवान्। किन्तु वास्तवे तावत् वेङ्कटेश्वरस्वामिनः भारद्वाजगोत्रः वर्तते - अन्नमाचार्यस्यापि भारद्वाजगोत्रः एव। एक गोत्रः चेदपि पद्मावती पक्षतया विवाहप्रमुखरूपेण आकाशराज्ञः स्थाने स्थित्वा श्रीनिवासाय कन्यादानं भगवता दत्तं महाभाग्यरूपेण भावितवान्। आनन्दनिलयः नित्यवरः चेत् अन्नमाचार्यः नित्यकन्यादाता। एनमेव सम्प्रदायं पुरस्कृत्य अधुनाऽपि भूयमाने श्रीनिवासनित्यकल्याणोत्सवे अन्नमाचार्यवंशजाः एव कन्यादातृरूपेण व्यवहरन् प्रमुखपात्रं भजन्ति।

जगत्कल्याणचक्रवर्तिनः श्रीवेङ्कटेश्वर स्वामिनः नित्यकल्याणः अधुनापि निर्विघ्नतया भूयमानः सन् तद्वारा श्रीनिवासमहाप्रभोः सम्पूर्ण कृपां प्राप्तुम् अत्यन्तविशिष्टसेवा रूपेण यावत्प्रपञ्चे भक्तलोके प्रख्यातिमप्राप्नोत्। अन्नमाचार्याणामन्तरं ताल्लपाकवंशजाः श्रीनिवासकल्याणनिमित्तम् अनेकान् ग्रामान्, अग्रहारान् च उपहाररूपेण समर्पितवन्तः इति विविधशासनैः ज्ञायते।

**तिरुमल श्रीवेङ्कटेश्वरस्वामिनः कल्याणोत्सवानां चारित्र्यं कथं प्रारम्भं जातम् -**

ताल्लपाक अन्नमाचार्यस्य पुत्रः पेद्द तिरुमलाचार्यः। अस्य पुत्रस्य नाम तिरुवेङ्कटनाथन्। एनं **'चिन्नन्ना'** इति नाम्ना पि सम्बोधयन्ति। दिनाङ्कः १७.७.१५४६ तमादारभ्य चिन्न तिरुमलाचार्यः श्रीस्वामिनः कल्याणोत्सवान् प्रारम्भं कृतवान्। कोण्डवीटि सिरामयि प्रान्तस्य मल्लवरं ग्रामात् आगम्यमानान् १२० वरहान् (श्रीहरेः कल्याणोत्सवाय भूयमान धनम्) श्रीस्वामिनः धनभण्डारे गमनरूपेण कृतवान्। कल्याणोत्सवस्य प्रारम्भदिनेषु पञ्चदिनात्मकमेव भवति स्म। एषु दिनेषु देवेभ्यः



प्रत्येकतया नैवेद्यादिकं निवेदयन्ति स्म। एनानुत्सवान् बहु विशिष्टता आचरन्ति स्म।

फाल्गुणमासे (चान्द्रमानस्य) अनुराधानक्षत्रे प्रारभ्य उत्तराषाढ़ानक्षत्रे समाप्तिर्भवति। ताल्लपाकवंशजाः श्रीनिवासं जामातृ रूपेण, पद्मावतीं पुत्रीरूपेण भाव्य १५४६ संवत्सरे एनं कल्याणोत्सवं प्रारम्भं कृतवन्तः।

ताल्लपाक अन्नमाचार्यस्य पौत्रः ताल्लपाक चिन्नतिरुमलाचार्यः (शासनं-५४-९३) तिरुपतिस्थ श्री गोविन्दराजस्वामिनः आलये १५४७ संवत्सरे कल्याणोत्सवस्य नूतनतया प्रवेशनसमये पञ्चदिनात्मकोत्सवं भूतुं व्यवस्थां कृतवान्। पञ्चमदिने रोहिणी नक्षत्रं भवेदिति धिया पूर्व-चतुर्षु दिनेषु वैभवतया कल्याणोत्सवान् कुर्वन्ति स्म।

कल्याणोत्सवसमये चतुर्षु पुरमाढवीथिषु भ्रामणम्, देवेभ्यः प्रत्यकनैवेद्यानि च निवेद्यन्ते। तस्मिन् कल्याणोत्सवे मलयप्पस्वामी वररूपेण; श्रीदेवी, भूदेवी मातारौ वधूरूपेण आसन्। अस्मिन् समये, अस्मिन् प्रान्ते उत्सववातावरणं तथा च वैभवः चतुर्षु दिक्षु दृश्यते।

तिरुमलायां नित्यसेवासु भक्ताः अधिकतया भागगृहीतारः नित्यकल्याणोत्सवे एव समायान्ति। पामर प्रभृति कोटीश्वराः अपि समानतया अस्मिन् नित्यकल्याणोत्सवे भागं गृह्णन्ति। भक्तानां संख्या अपि दिनदिन प्रवर्धमानः दृश्यते।

श्रीस्वामिनः प्रतिरूपस्य मलयप्प - स्वामिनः श्रीदेवी - भूदेवी सहिततया समाहतः कल्याणोत्सवः पूर्वं स्वर्णप्राङ्गणस्य पुरतः आचरन्ति स्म। ततः भक्तानां सौलभ्याय विमान प्रदक्षिणमार्गे

**तिरुमलायां नित्यसेवासु भक्ताः अधिकतया भागगृहीतारः नित्यकल्याणोत्सवे एव समायान्ति। पामर प्रभृति कोटीश्वराः अपि समानतया अस्मिन् नित्यकल्याणोत्सवे भागं गृह्णन्ति।**

स्थिते कल्याणमण्डपे, तथा च किञ्चित् कालं रङ्गनायकमण्डपे च क्रियते स्म। प्रतिदिनं वर्धमानां भक्तसंख्यां दृष्टौ स्थाप्य तं वेदिकां प्रस्तुते सम्पङ्गि प्रदक्षिणमार्गे दक्षिणस्यां दिशि स्थितस्य 'श्रीवेङ्कटरमणस्वामिकल्याणमण्डप'नाम्ना व्यवस्थीकृतायां वेदिकायां श्रीनिवासस्य कल्याणं निर्वहन्ति।

### आर्जितसेवतया कल्याणोत्सवः -

कालान्तरे कल्याणोत्सवः आर्जितसेवतया परिणमितः। श्री सि.अन्नाराव् वर्यः यदा कार्यनिर्वहणाधिकारी आसीत्। तदा उत्सवस्य शुल्कः ५००/- आसीत्। पूर्वे तावत् भक्तैः धनसमर्पणानन्तरमेव क्रीयते स्म। ततः परं नित्यकल्याणस्य प्रस्तावना आगता। वैखानसागमानुसारं विष्णवे क्रियमाणेषु त्रयेषु उत्सवेषु अयं कल्याणोत्सवः श्रद्धोत्सवः अथवा काम्योत्सवः इति अभिधीयते। अन्यौ उत्सवौ कालोत्सवौ अथवा नैमितिकोत्सवौ स्तः। वेङ्कटेश्वरस्वामिनः कृपापात्राः भक्ताः ति.ति.दे द्वारा आदिष्टं शुल्कं प्रदाय कल्याणोत्सवाय प्रतिज्ञां कुर्वन्ति। प्रस्तुते १०००/- समर्प्य श्रीस्वामिनः नित्यकल्याणोत्सवे भागं ग्रहीतुं शक्यते। गृहस्थौ अर्थात् भार्या-भर्ता च उभाभ्याम् एव अनुमतिः प्रकल्प्यते। एतयोः कल्याणोत्सवानन्तरम् उत्तरीयं, जाकेट्, २ बृहत् मोदके, २ वटिके, ५ लघुमोदकानि प्रसादरूपेण दीयन्ते।





# संशयान् खण्डय कार्येषु प्रगतिं प्राप

**भगवद्गीतायाः अध्ययनं किमर्थं करणीयम् इति प्रश्नः साधारणतया सर्वेषां मनसि जायते। मनुष्यं धृत्वा चत्वारः दोषाः भवन्ति। ते-१.दोषकरणम् २. मोहे भवनम् (एकं दृष्ट्वा अपरस्मिन् विषये अनुमानः) ३. द्रोह स्वभावः, ४. असमग्रेन्द्रियत्वम्। एते चतुष्प्रकारकाः दोषाः प्रायः सर्वान् धरन्ति। शास्त्रज्ञान्, पण्डितान्, नृपान्, मार्गे गमनरतान् भिक्षुकानपि एते धरन्ति।**

तेलुगु मूलम् - डा।। वैष्णवाङ्घ्रि सेवकदासः
संस्कृतानुवादः - श्री राकेश दूबे

वेदः इत्युक्ते ज्ञानम्। वेदान्तः इत्युक्ते ज्ञानस्य चरमसीमा। तदेव उपनिषत् इत्युच्यते। सर्वोपनिषदां सारः एव भगवद्गीता अतः भगवद्गीतायाम् अलभ्यमानः विषयः कोऽपि नास्त्येव। प्रपञ्चे सर्वेषु शास्त्रेषु अनवगम्यमानाः विषयाः अपि भगवद्गीतायां दृश्यन्ते।

मनुष्यस्य प्रथमदोषः वर्तते अकर्माचरणम्। तं पापः इत्यपि केचन वदन्ति। तच्च ज्ञात्वा वा, अज्ञात्वा वा भवति। ज्ञात्वाकरणे दोषः, अज्ञात्वा करणे भ्रमः भवति। अज्ञात्वापि ज्ञातवत् अकर्माचरणमपि दोषः एव। तदेव कपटत्वलक्षणम्। द्वापरयुगान्ते कर्णः अस्त्रविद्याध्ययनार्थं ब्राह्मणः इति उच्यमाने परशुरामः तं वचनं विश्वसितवान्। अर्थात् सः असत्यं सत्यतया भावितवान्। अयमेव मोहे भवनमिति उच्यते। कर्णः स्वीयं जन्मरहस्यम् अनुक्त्वा ब्राह्मणः इति प्रोक्त्वा द्रोहं कृतवान्। अयमपि मनुष्यस्य दोषः एव। मनुष्यस्य इन्द्रियाणि असमगृतया भवन्ति। तानि कश्चनपरिस्थितिषु ज्ञानं न प्राप्नुवन्ति। आकाशे स्थितः सूर्यः स्थालिका इव दृश्यते। किन्तु वास्तवे तावत् सूर्यः पृथिव्याः परिमाणे बृहत् वर्तते। अर्थात् अस्माकं नेत्रे सम्यक्तया वास्तवस्य प्रदर्शनं न दत्तौ। कर्णस्य असत्योच्यमाने सत्यपि परशुरामः तं परीक्षितुम् असमर्थः जातः। तदेव इन्द्रियाणां बलहीनत्वम्। किन्तु एकस्मिन् दिने परशुरामः कर्णस्य जान्वोरुपरि शयनसमये एकः कीटः कर्णस्य जङ्घां दंशनमारब्धः। किन्तु गुरोः निद्रां भग्नं कर्तुं नेच्छमानः कर्णः तां पीडां वोढवान्। तस्य जङ्घा भागात् रक्तः च स्रवमानः परशुरामस्य शरीरं स्पृष्टः। तदा तस्य निद्रानिवृत्तिर्जाता, विषयश्च अवगतः। एनां बाधापूर्णपीडां वोढमानः क्षत्रियः एव भवितुमर्हति इति, कर्णः ब्राह्मणेतरः इति ज्ञात्वा-अभ्यसिताः समस्तविद्याः प्राप्ते समये स्फुरणे न आयान्ति इति शपितवान्। तेन अर्जुनवधं करोमीति विश्वासः कर्णे मोहरूपेण (भ्रमः) परिवर्तितः। एवं रीत्या मानवः चत्वारैः दोषैः परिमितश्च वर्तते। अतः मनुष्येण दत्तसन्देशाः परिपूर्णाः न भवन्ति। किन्तु भगवद्गीता तथा नास्ति। तस्याः सन्देशः कस्मिन्नपि काले, देशे, कस्यापि मनुष्यस्य, वयस्कस्य, जातेः, स्त्री-पुरुषभेदभावं विहाय सर्वान् प्रबोधयति च।



मनुष्यः केवलं बुद्धेः उपरि अथवा अन्येषां मानवानां बुद्धेः उपरि आधारीभूतः भवति चेत् निश्चयेन केनापि संशये भ्रमितः भवति। संशयकर्ता मनः। किन्तु आत्मस्थितौ सन् मनुष्यः आध्यात्मिकबुद्ध्या संशयान् परित्यजन्तु इति श्रीकृष्णभगवान् बोधयति। शास्त्राणामुपरि संशयरतेभ्यः पतनम् अवश्यं भवतीति ज्ञापयति।

**श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति।।**

दिव्यज्ञानेच्छुकामः, इन्द्रियजेता व्यक्तिः ज्ञानप्रापणार्थमर्हः। तं प्राप्य सः परमशान्तिं साधयति।

(भगवद्गीता - ४-३९)



मनुष्यः केवलं बुद्धेः उपरि अथवा अन्येषां मानवानां बुद्धेः उपरि आधारीभूतः भवति चेत् निश्चायेन केनापि संशये भ्रमितः भवति। संशयकर्ता मनः। किन्तु आत्मस्थितौ सन् मनुष्यः आध्यात्मिकबुद्ध्या संशयान् परित्यजन्तु इति श्रीकृष्णभगवान् बोधयति।

अज्ञश्चाश्रद्धधानश्च संशयात्मा विनश्यति
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः।।

शास्त्रसंशयरताः अज्ञानिनः, श्रद्धाहीनाः भगवद्भावमप्राप्य पतिताः भवन्ति। संशयात्मनः अस्मिन् लोके, परलोके च सुखः नास्ति। (भगवद्गीता ४-४०)

अतः 'अज्ञानेन हृदये समागतान् संशयान् ज्ञानखड्गेन खण्डयित्वा योगेन युक्तः सन् उत्तिष्ठ' इति गीताचार्यः अर्जुनाय बोधितवान्। अयमुपदेशः सर्वदा आचरणयोग्यः वर्तते। इदानीन्तनकाले सर्वेऽपि वैदिकग्रन्थान् कार्यसाधने नाना विधान् संशयान् निवारयितुम् अशक्ताः भवन्ति। अतः ज्ञानेन तेषामपाकरणाय सर्वसंशयनिर्वर्तनीं भगवद्गीतां विद्यार्थिनः, वृद्धाः, युवाः सर्वेऽपि अनुभवज्ञानां पार्श्वे समागत्य, अध्ययनं कृत्वा स्वीयवाञ्छितान् लाभान् प्राप्नुवन्तु। भगवद्गीतामधीत्य, अनुसृत्य बहवः अनेकान् विजयान् प्राप्तवन्तः। महनीयानां चरितानि एव अस्य प्रमाणम्।



# लेखकेभ्यः स्वागतम्

सप्तगिरिमासपत्रिकायां प्रकाशनार्थं लेखनानि प्रेषयितुमर्हन्ति। लेखकाः कृपया अधोनिर्दिष्टसूचनाः अवश्यं पालयन्तु। तेन लेखानां परिशीलने, प्रकाशने च आनुकूल्यं भवति।

१. लेखनानि पत्रस्य एकस्मिन्नेव पार्श्वे लिखितं भवेत्। लेखनं मुद्रणे पृष्ठद्वयातिरिक्तं यथा न भवेत् तथा प्रेषयन्तु।

२. देवनागरिलिप्यां टङ्कणं कृत्वा यदि प्रेषयन्ति तर्हि सान्द्रमुद्रिकामपि प्रेषयन्तु। पेज्मेकर् अनु-६ मध्ये टङ्कणं कृत्वा प्रेषयन्ति चेत् उपकृताः भवेम।

3. प्रेष्यमाणं लेखनम् आत्मनः एव इत्यत्र धृवीकरणपत्रमवश्यं भवेत्।

४. लेखकाः स्वसङ्केतेन सह दूरवाणीसङ्ख्यामपि लिखन्तु।

५. रचनानां चयने, प्रकाशने च प्रधानसम्पादकस्यैव अन्तिमनिर्णयः। अस्मिन् विषये पत्रव्यवहारादिकं नानुमन्यते।

६. स्वरचनासम्बद्धचित्राण्यपि प्रेषयितुमर्हन्ति।

७. रचनायाः भाषा कठिना, दीर्घसमासयुक्ता वा मा भवतु।

८. पर्वदिनादिकमुद्दिश्य लिख्यमानं लेखनं मासत्रयपूर्वमेव प्रेषितं भवेत्।

९. लेखनस्य प्रतिस्वीकरणेच्छुकाः पर्याप्तप्रमाणेन पत्रालयचीटिकायुक्तं, मुखभागे सङ्केतेन युक्तं पत्राचारपुटकं संयोज्य प्रेषयन्तु।

१०. मुद्रितलेखनानि भगवदनुग्रहेण, पारितोषकेन च सत्क्रियन्ते।

**भवतां लेखनप्रेषणार्थमस्माकं**

**सङ्केतः**

प्रधानसम्पादकः
सप्तगिरिमासपत्रिका। ति.ति.दे. प्रेस् कांपौण्ड्
कपिलतीर्थं रोड्, तिरुपति
चित्तूरु - आं. प्र.
पिन् - ५१७ ५०७

आयुर्वेदः

# आरोग्याय नैवेद्यं गुडम्



तेलुगु मूलम्- डा. चिट्टिभोट्ल मधुसूदनशर्मा
संस्कृतानुवादः ऐ.माधवशर्मा

**भारतीयसंस्कृति-सम्प्रदायेषु, आचार-व्यवहारेषु च गुडस्य प्राधान्यता वर्तते एव। पूजा-व्रत-विवाहादिषु सन्दर्भेषु वयं गुडं सर्वसाधारणतया एव उपयुज्मः। भगवते दीयमानानि मिष्ठान्ननैवेद्यानि अधिकमात्रायां तावत् गुडेन एव निर्मीयन्ते। अत्यन्तप्रशस्तयुतं गुडं (गुडेन निर्मितं पदार्थं) सेवनेन अस्माकं मानसिकदोषाः न्यूनीभूत्वा समन्वयं भवति।**

इक्षुरसम् उष्णं कृत्वा, घनीभूतपदार्थेन गुडस्य निर्माणं कुर्वन्ति। हिन्दीभाषायां 'गूड्' इति, कन्नडे 'बेल्ल' इति, तमिले 'वेल' इति, मलयालायां 'शर्कर' इति, आङ्गले 'जागरि' अथवा 'ट्रियाकिल्' इति एनं वदन्ति।

ग्रामिने इत्युच्यमानस्य वृक्षजातेः सम्बद्धम् इक्षुं शास्त्रीयतया शाकेरम् अफीषनासिल् इति व्यवहरन्ति।

प्राचीनगुडं पथ्यकरं वर्तते; अर्थात् शरीराय हितकरं वर्तते। नवीनगुडम् अपथ्यकरमिति, शरीराय अहितकरमिति साम्प्रदायवैद्यं वदति। एनं गुडम् आहारपदार्थानां निर्माणे एव न, अपि तु नानाविधव्याधीन् निरोधक्षमौषधिरूपेणापि अस्मत् वैद्यविधानेषु दृश्यते। केषु केषु व्याधिषु कथं गुडस्योपयोगं कुर्मः? इति इदानीं ज्ञास्यामः।

**बहिष्ठुपीडायै -** बहिष्ठु समनन्तरमेव स्त्रियः, बालिकाश्च द्विचमसपरिमाणं गुडं, एकचमसमात्रं घृतं, १/४ चमसपरिमितं कृष्णमरीचचूर्णं सम्मेल्य सेवयेत्। द्वितीय, तृतीयदिनेष्वपि प्रातः रिक्तोदरे स्वीकुर्यात्।

वेदना समये गुडं, अद्रकं पेषयित्वा, रसं निष्कास्य एकैकस्मिन् नासिकाछिद्रे द्विबिन्दून् स्वीकुर्यात्। अनेन समस्यायाः निवारणं शीघ्रं भवति।

**सुखमूत्राय -** ५०ग्रा. गुडचूर्णं, ५०ग्रा. जीरकाचूर्णं मिश्रीकृत्वा स्थाप्य प्रातः सायं च एकैकस्मिन् समये अर्धचमसचूर्णं १०० मि.ली. जले सम्मेल्य सेवनेन मूत्रज्वलनादि समस्याः न्यूनीभवन्ति।

**जानु, कटि समस्यानां कृते -** गुडं, सुधाखण्डचूर्णं मिश्रीकृत्वा, किञ्चित् जलं सम्मेल्य लेपनं कुर्यात्। अनेन स्खलनपीडाः, वेदनाः शीघ्रतया उपशान्तिं प्राप्नुवन्ति।

**व्याधिनिरोधकशक्तेः वर्धनाय -** १/२ कि. गुडं, १/२ कि. आमलकान् स्वीकृत्य स्थापयेत्। प्रथमतया कूप्यां आमलकान् स्थापयेत्, ततः उपरिष्ठात् गुडचूर्णं क्षिपेत्। एवं त्रिचतुष्पङ्क्तिषु कृत्वा पिधानिकया दृढतया पिधानं कुर्यात्। ४,५ दिनानि यावत् एवमेव स्थापनेन आमलकाः मृदुस्थाः भवन्ति। ततः प्रतिदिनं प्रातः रिक्तोदरे एकामामलकीं सेवनेन व्याधिनिरोधकशक्तिः वर्धनं भूत्वा व्याधयः न आयान्ति।

**वृश्चिक दंशने -** गुडं, सर्षपान् समानतया पिष्टं कृत्वा दंशस्थाने स्थापनेन वृश्चिकदंशनात् भूयमानाः पीडाः न्यनीभवन्ति।

**शयनसमये मूत्रनिवारणाय -** गुडं, कृष्णतिलचूर्णं, शुष्कनारिकेलत्वक्, दीर्घमालाचूर्णम् एकैकं ५० ग्रा. प्रमाणेन मेलयित्वा, स्थाप्य प्रातः सायं वयानुसारं १ तः ५ ग्रा. औषधं स्वीकृत्य चोषयेत्। विविधेषु आसवारिष्टेषु, लेह्यादिषु च गुडम् उपयुज्यन्ति।






# श्रीमद्भागवते धर्मपरिरक्षणम्

संस्कृतानुवादः - डा. कस्तूरि वि.वि.यस्.ए.आर्.चन्द्रशेखरः

**धर्मप्रोज्झितकैतवोऽत्र परमः निर्मत्सराणां सताम्,**
**वेद्यं वास्तवमत्रवस्तु शिवदं तापत्रयोन्मूलनम्।**
**श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः**
**सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात्॥**

इदं कलियुगम्। कलियुगमित्युक्ते कलहयुगं, कलतयुगं, कल्मषयुगमिति। एतानि दुर्गुणानि अस्मिन् कलियुगे वर्तन्ते चेत् कथं शान्तिः लभ्यते?, एवं कलियुगं सर्वेषां पापं कर्तुं प्रेरयति। तद्वारा सर्वेषां दुःखमायाति, अतः कलिपुरुषः कथं प्रविष्टवान्, एवं समस्तभूमण्डलं कथं व्यापितवान्। तेषां प्रभावात् वयं केन प्रकारेण रक्षणं प्राप्नुमः? इत्याद्यंशान् ज्ञास्यामः -

इदानीं कलियुगे प्रथमपादे प्रारम्भदशायामेव वर्तन्ते। अत एव वयं नित्यनैमित्तिककाम्यकर्मानुष्ठानेषु सङ्कल्पे ''कलियुगे-प्रथमपादे'' इति उच्चरन्तः स्मः। पूर्वं नैमिशारण्ये ऋषयः एकत्रोपविश्य कलिप्रभावात् अस्मान् नियन्त्रयितुं सहस्रवर्षपरिमितः एकः यागः आरम्भितवन्तः। तेन लोके जनानां, प्रज्ञानां कलिप्रभवात् नियन्त्रणमेव यज्ञसंङ्कल्पः। किन्तु तेषां यागेन चिन्तितफलितं नागतम्। तदा ते भागवतं श्रोतुं सिद्धाः। लोके भागवतपुराणम् कलितिमिरभास्करमिव! कलितिमिरमित्युक्ते कलीत्यज्ञानान्धकारनाशकसूर्य एव।

कलियुगे कलिपुरुषः लोके जनानां सत्वगुणं हरित्वा तान् पतनमार्गे गमनाय प्रेरयति। अत एव कलियुगे लोकानां, लोके प्रजान् च रक्षितुं सत्वगुणं वर्धयितुं भागवतपुराणमाविर्भूतम्।

भगवतः श्रीकृष्णस्य लीलाः पुराणेऽस्मिन् बहुधा दृश्यन्ते। भक्ति-ज्ञान-वैराग्यदायकस्य भागवतस्य रसास्वादननिमग्नानां सांसारिकविषयाः तृणसदृशा एव। एवं स्थितौ एकदा नारदमुनिः श्रीमद्भागवतोक्तरीत्या श्रीकृष्णस्य लीलाविशेषान् वर्णयित्वा तद्वारा कलिपुरुषप्रभावात् सर्वान् त्रातुं श्रीमद्भागवतं उद्बोधं चकार।

मोक्षसाधनसामग्र्यां धर्मः (भक्तिः) एव गरीयसी इति, धर्मोपदेशत्वेन भागवतस्य विशेषप्रसक्तिरागता। अत एव **एकं भागवतं शास्त्रं मुक्तिदानेन गर्जति** इति पौराणिकानां वचनम्। अतः लोके कलिपुरुषप्रभावात् त्रातुं हरिनामसंकीर्त्तनमेव शरण्यम्। अतएव उच्यते कलिसन्तरणोपनिषदि यथा -

**हरे राम हरे राम राम राम हरे हरे**
**हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे** इति।



Edited and Published on behalf of T.T.Devasthanams by Dr. K.Radharamana, M.A., M.Phil., Ph.D., Chief Editor, T.T.D., and Printed at T.T.D. Press by Sri. R.V. Vijay Kumar, B.A. B.Ed., Dy.E.O., (Publication & Press), T.T.D. Press, Tirupati - 517 507



तिरुमल श्रीस्वामिनः आलये ति.ति.दे.
पेद्दजीयर् स्वामिनः आध्वर्ये कार्तिकदीपोत्सवः।



श्री अनिलकुमार सिङ्घाल्, ऐ.ए.एस्., ति.ति.दे.
संयुक्त कार्यनिर्वहणाधिकारी
श्री के.एस्. श्रीनिवासराजु, ऐ.ए.एस्.,



तिरुमल श्रीस्वामिनः आलये कार्तिकदीपानां दिव्यप्रकाशः



श्रीस्वामि पुष्करिण्यां कार्तिकदीपोत्सवस्य निर्वहणदृश्यम्



उभय तेलुगुराज्ययोः गवर्नर् श्री इ.एस्.एल्. नरसिंहन् वर्यः
(०५-१२-२०१८) दिनाङ्के तिरुमल श्रीस्वामिनः दर्शनमकारा



श्रीस्वामिनः तीर्थप्रसादान् मान्यश्री गवर्नर् दम्पती समर्पयन् ति.ति.दे.
कार्यनिर्वहणाधिकारी श्रीअनिलकुमार् सिङ्घाल्, ऐ.ए.एस्.,



ति.ति.दे. द्वारा प्रतिवर्षं आचार्यमण्डपानां
सनातनधार्मिकपरीक्षाणां पुरस्कारवितरणदृश्यम्



ति.ति.दे. [illegible] 'सप्तगिरि' [illegible]
ति.ति.दे. [illegible] श्री [illegible], तिरुपति संयुक्त कार्यनिर्वहणाधिकारी
श्री [illegible], ऐ.ए.एस्., ति.ति.दे. [illegible]
[illegible] ति.ति.दे. [illegible]

